# ॥ शिवकवचस्तोत्रम् ॥

श्रीगणेशाय नमः ॥

अस्य श्रीशिवकवचस्तोत्रमंत्रस्य ब्रह्मा ऋषिः, अनुष्टुप् छंदः, श्रीसदाशिवरुद्रो देवता, ह्रीं शक्तिः, रं कीलकम्, श्रीं ह्रीं क्लीं बीजम्, श्रीसदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः ॥

अथ न्यासः॥

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ ह्रां सर्वशक्तिधाम्ने ईशानात्मने अंगुष्ठाभ्यां नमः ॥

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐनं रि नित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्जनीभ्यां नमः ॥

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐमं रुं अनादिशक्तिधाम्ने अघोरात्मने मध्यमाभ्यां नमः ॥

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ शिं रैं स्वतंत्रशक्तिधाम्ने वामदेवात्मने अनामिकाभ्यां नमः ॥

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ वां रौं अनुप्तशक्तिधाम्ने सद्योजातात्मने कनिष्ठिकाभ्यां नमः ॥

ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ यं रः अनादिशक्तिधाम्ने सर्वात्मने करतलकरपृष्ठाभ्यां नमः॥

एवं हृदयादि ॥

**अथ ध्यानम् ॥**

वज्रदंष्ट्रं त्रिनयनं कालकंठमरिंदमम् । सहस्रकरमत्युग्रं वंदे शंभुमुमापतिम् ॥ १ ॥

अथापरं सर्वपुराणगुह्यं निःशेषपापौघहरं पवित्रम् ।

जयप्रदं सर्वविपत्प्रमोचनं वक्ष्यामि शैवं कवचं हिताय ते ॥ २ ॥

**ऋषभ उवाच ॥**

नमस्कृत्वा महादेवं विश्वव्यापिनमीश्वरम् ।

वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम् ॥ ३ ॥

शुचौ देशे समासीनो यथावत्कल्पितासनः ।

जितेंद्रियो जितप्राणश्चिंतयेच्छिवमव्ययम्॥ ४ ॥

हृत्पुंडरीकांतरसन्निविष्टं स्वतेजसा व्याप्तनभोवकाशम् ।

अतींद्रियं सूक्ष्ममनंतमाद्यं ध्यायेत्परानंदमयं महेशम् ॥ ५ ॥

ध्यानावधूताखिलकर्मबंधश्चिरं चिदानंदनिमग्नचेताः ।

षडक्षरन्याससमाहितात्मा शैवेन कुर्यात्कवचेन रक्षाम् ॥ ६ ॥

मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे।

तन्नाम दिव्यं वरमंत्रमूलं धुनोतु मे सर्वमघं हृदिस्थम् ॥ ७ ॥

सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मयानंदघनश्चिदात्मा ।

अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥ ८ ॥

यो भूस्वरूपेन बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः ।

योऽपांस्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्य: ॥ ९ ॥

कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः ।
स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥१०॥
प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः।
चतुर्मुखस्तत्पुरुषस्त्रिनेत्र: प्राच्यां स्थितं रक्षतु मामजस्रम् ॥ ११ ॥
कुठारवेदांकुशपाशशूलकपालढक्काक्षगुणान्दधानः ।
चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥ १२ ॥
कुंदेंदुशंखस्फटिकावभासो वेदाक्षमालावरदाभयांकः ।
त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योऽधिजातोऽवतु मां प्रतीच्याम् ॥ १३ ॥
वराक्षमालाऽभयटंकहस्तः सरोजकिंजल्कसमानवर्णः।
त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेव: ॥१४ ॥
वेदाभयेष्टांकुशपाशटंककपालढक्काक्षकशूलपाणिः ।
सितद्युतिः पंचमुखोऽवतान्मामीशान ऊर्ध्वं परमप्रकाशः ॥ १५ ॥
मूर्धानमव्यान्मम चंद्रमौलिर्भालं ममाव्यादथ भालनेत्रः ।
नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥ १६ ॥
पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली ।
वक्त्रं सदा रक्षतु पंचवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥ १७ ॥
कंठं गिरीशोऽवतु नीलकंठ: पाणिद्वयं पातु पिनाकपाणिः।
दोर्मूलमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखांतकोऽव्यात् ॥ १८ ॥
ममोदरं पातु गिरींद्रधन्वा मध्यं ममाव्यान्मदनांतकारी ।
हेरंबतातो मम पातु नाभिं पायात्कटिं धूर्जटिरीश्वरो मे ॥ १९ ॥
ऊरुद्वयं पातु कुबेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात् ।
जंघायुगं पुंगवकेतुरव्यात् पादौ ममाव्यात् सुरवंद्यपादः ॥ २० ॥
महेश्वर: पातु दिनादियामे मां मध्ययामेऽवतु वामदेवः।
त्रिलोचनः पातु तृतीययामे वृषध्वजः पातु दिनांत्ययामे ॥ २१ ॥
पायान्निशादौ शशिशेखरो मां गंगाधरो रक्षतु मां निशीथे ।
गौरीपतिः पातु निशावसाने मृत्युंजयो रक्षतु सर्वकालम् ॥ २२॥
अंतःस्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु बहिः स्थितं माम् ।
तदंतरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समंतात् ॥ २३ ॥
तिष्ठंतमव्याद्भुवनैकनाथः पायाद्व्रजंतं प्रमथाधिनाथः ।
वेदांतवेद्योऽवतु मां निषण्णं मामव्ययः पातु शिवः शयानम् ॥ २४ ॥
मार्गेषु मां रक्षतु नीलकंठः शैलादि दुर्गेषु पुरत्रयारिः।
अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥ २५ ॥

कल्पांतकाटोपपटुप्रकोपस्फुटाट्यहासोच्चलिताण्डकोशः ।
घोरारिसेनार्णवदुर्निवारमहाभयाद्रक्षतु वीरभद्रः ॥ २६ ॥
पत्यश्वमातंगघटावरूथसहस्रलक्षायुतकोटिभीषणम् ।
अक्षौहिणीनां शतमाततायिनां छिंद्यान्मृडो घोरकुठारधारया ॥ २७ ॥
निहंतु दस्यून्प्रलयानलार्चिर्ज्वलत्रिशूलं त्रिपुरांतकस्य ।
शार्दूलसिंहर्क्षवृकादिहिंस्रान् संत्रासयत्वीशधनुः पिनाकः ॥ २८ ॥
दुःस्वप्नदुःशकुनदुर्गतिदौर्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि ।
उत्पाततापविषभीतिमसद्ग्रहार्तिव्याधींश्च नाशयतु मे जगतामधीशः ॥ २९ ॥

ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सर्वमंत्रस्वरूपाय सर्वयंत्राधिष्ठिताय सर्वतंत्रस्वरूपाय सर्वतत्त्वविदूराय ब्रह्मरुद्रावतारिणे नीलकंठाय पार्वतीमनोहरप्रियाय सोमसूर्याग्निलोचनाय भस्मोद्धूलितविग्रहाय महामणिमुकुटधारणाय माणिक्यभूषणाय सृष्टिस्थितिप्रलयकालरौद्रावताराय दक्षाध्वरध्वंसकाय महाकालभेदनाय मूलाधारैकनिलयाय तत्त्वातीताय गंगाधराय सर्वदेवाधिदेवाय षडाश्रयाय सकलवेदांतसाराय त्रिवर्गसाधनाय अनंतकोटिब्रह्मांडनायकाय अनंतवासुकि - तक्षककर्कोटक - शंखकुलिकपद्महापद्मेत्यष्टमहानागकुलभूषणाय प्रणवस्वरूपाय चिदाकाशाय आकाशदिक्स्वरूपाय ग्रहनक्षत्रमालिने सकलाय कलंकरहिताय सकललोकैककर्त्रे सकललोकैकभर्त्रे सकललोकैकसंहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणे सकलनिगमगुह्याय सकलवेदांतपारगाय सकललोकैकवरप्रदाय सककलोकैकशंकराय शशांकशेखराय शाश्वतनिजावासाय निराभासाय निरामयाय निर्मलाय निर्लोभाय निर्मदाय निश्चिंताय निरहंकाराय निरंकुशाय निष्कलंकाय निर्गुणाय निष्कामाय निरुपप्लवाय निरवद्याय निरंतराय निष्कारणाय निरांतकाय निष्प्रपंचाय निःसंगाय निर्द्वंद्वाय निराधाराय नीरागाय निष्क्रोधाय निर्मलाय निष्पापाय निर्भयाय निर्विकल्पाय निर्भेदाय निष्क्रियाय निस्तुलाय निःसंशयाय निरंजनाय निरुपमविभवाय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानंदाद्वयाय परमशांतस्वरूपाय तेजोरूपाय तेजोमयाय जय जय रुद्र महारौद्र भद्रावतार महाभैरव कालभैरव कल्पांतभैरव कपालमालाधरखट्वांग खड्गचर्मपाशांकुश डमरुशूलचापबाणगदाशक्तिभिंदिपालतोमरमुसलमुद्गर पाशपरिघशुंडी शतघ्नीचक्राद्यायुधभीषणकर सहस्रमुख दंष्ट्राकरालवदन विकटाट्टहासविस्फारितब्रह्मांडमंडल नागेंद्रकुंडल नागेंद्रहार नागेंद्रवलय नागेंद्रचर्मधर मृत्युंजय त्र्यंबक त्रिपुरांतक विश्वरूप विरूपाक्ष विश्वेश्वर वृषभवाहन विषविभूषण विश्वतोमुख सर्वतो रक्ष रक्ष मां ॥

ज्वल ज्वल महामृत्युमपमृत्युभयं नाशय नाशय चोरभयमुत्सादयोत्सादय विषसर्पभयं शमय शमय चोरान्मारय मारय मम शत्रूनुच्चाटयोच्चाटय त्रिशूलेन विदारय विदारय कुठारेण भिंधि भिंधि खड्गेन छिंधि छिंधि खट्वांगेन विपोथय विपोथय मुसलेन निष्पेषय निष्पेषय बाणैः संताडय संताडय रक्षांसि भीषय भीषयाशेषभूतानि विद्रावय विद्रावय कूष्मांडवेतालमारीचब्रह्मराक्षसगणान् संत्रासय संत्रासय मामभयं कुरु कुरु वित्रस्तं मामाश्वासयाश्वासय नरकमहाभयान्मामुद्धरोद्धर संजीवय संजीवय क्षुत्तृड्भ्यां मामाप्याययाप्यायय दुःखातुरं मामानंदयानंदय शिवकवचेन मामाच्छादयाच्छादय मृत्युंजय त्र्यंबक सदाशिव नमस्ते नमस्ते ॥

**ऋषभ उवाच ॥**

इत्येतत्कवचं शैवं वरदं व्याहृतं मया । सर्वबाधाप्रशमनं रहस्यं सर्वदेहिनाम् ॥ ३० ॥
यः सदा धारयेन्मर्त्यः शैवं कवचमुत्तमम् । न तस्य जायते क्वापि भयं शंभोरनुग्रहात् ॥ ३१ ॥

क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपिवा। सद्यः सुखमवाप्नोति दीर्घमायुश्च विंदति॥ ३२॥
सर्वदारिद्र्यशमनं सौमंगल्यविवर्धनम्। यो धत्ते कवचं शैवं स देवैरपि पूज्यते॥ ३३॥
महापातकसंघातैर्मुच्यते चोपपातकैः। देहांते मुक्तिमाप्नोति शिववर्मानुभावतः॥ ३४॥
त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम्। धारयस्व मया दत्तं सद्यः श्रेयो ह्यवाप्स्यसि॥ ३५॥

**सूत उवाच॥**

इत्युक्त्वा ऋषभो योगी तस्मै पार्थिवसूनवे। ददौ शंखं महारावं खड्गं चारिनिषूदनम्॥ ३६॥
पुनश्च भस्म संमंत्र्य तदंगं परितोऽस्पृशत्। गजानां षट्सहस्रस्य त्रिगुणस्य बलं ददौ॥ ३७॥
भस्मप्रभावात्संप्राप्तबलैश्वर्यधृतिस्मृतिः। स राजपुत्रः शुशुभे शरदर्क इव श्रिया॥ ३८॥
तमाह प्रांजलिं भूयः स योगी नृपनंदनम्। एष खड्गो मया दत्तस्तपोमंत्रानुभावितः॥ ३९॥
शितधारमिमं खड्गं यस्मै दर्शयसे स्फुटम्। स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम्॥ ४०॥
अस्य शंखस्य निर्ह्रादं ये श्रृण्वंति तवाहिताः। ते मूर्च्छिताः पतिष्यंति न्यस्तशस्त्रा विचेतनाः॥ ४१॥
खड्गशङ्खाविमौ दिव्यौ परसैन्यविनाशिनौ। आत्मसैन्ये स्वपक्षाणां शौर्यतेजोविवर्धनौ॥ ४२॥
एतयोश्च प्रभावेण शैवेन कवचेन च। द्विषट्सहस्रनागानां बलेन महतापि च॥ ४३॥
भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि। प्राप्य सिंहासनं पित्र्यं गोप्तासि पृथिवीमिमाम्॥ ४४॥
इति भद्रायुषं सम्यगनुशास्य समातृकम्। ताभ्यां संपूजितः सोऽथ योगी स्वैरगतिर्ययौ॥ ४५॥

**इति श्रीस्कंदपुराणे ब्रह्मोत्तरखंडे शिवकवचस्तोत्रं संपूर्णम्॥**